श्रीगणेशायनमः ॐ नमो भगवते वासुदेवाय दालभ्य उवाच भगवन्प्राणि
नः सर्वे विषरोगाद्युपद्रवैः ॥ दुष्टग्रहोपघातैश्च सर्वकालमुपद्रुताः ॥१॥
आभिचारिककृत्याभिः स्पर्शरोगैश्च दारुणैः ॥ सदा संपीड्यमानास्तु
तिष्ठन्ति मुनिसत्तम ॥२॥ येन कर्म्मविपाकेन विषरोगाद्युपद्रवाः न भ
वन्ति नराणां यन्मे यथावद्वक्तुमर्हसि ॥३॥ पुलस्त्य उवाच व्रतोपवासै
॥१॥ र्यैर्विष्णुर्नान्यजन्मनि तोषितः ॥ ते नरा मुनिशार्दूल ग्रहरोगादिभा ॥१॥
गिनः ॥४॥ यैर्न तत्प्रवणं चित्तं सर्वदैव नरैः कृतम् ॥ विषज्वरग्रह
णां च मनुष्यास्ते न भागिनः ॥५॥ आरोग्यं परमामृद्धिं मनसा यद्य
दिच्छति ॥ तत्तदाप्नोत्यसंदिग्धं परत्राप्यच्युतोषकृत् ॥६॥ नाधी
नाप्नोति न व्याधीन्न विषग्रहबन्धनम् ॥ कृत्यास्पर्शभयं वापि
तोषिते मधुसूदने ॥७॥ सर्वदुःखशमास्तस्य सौम्यास्तस्य सदा ग्रहाः

मार्जयेत् सर्वगात्राणि कुशाग्रैर्दुःस्वप्नशान्तिकृत् १५ रोगग्रहोपघातानां
कुर्याच्छान्तिमिमां शुभाम् विष्णुभक्तो विशेषेण शुचिस्नातमान
सः १६ वाराहं नारसिंहं च वामनं विष्णुमेव च ध्यात्वा समाहितो भूत्वा
न्यासानङ्गेषु विन्यसेत् १७ अङ्गुष्ठाग्रे तु गोविन्दं तर्जन्यां तु महो
2 धरम् मध्यमायां हृषीकेशमनामिकायां त्रिविक्रमम् १८ कनि
॥२॥ ष्ठायां न्यसेद्विष्णुं करमध्ये तु माधवम् शिखायां केशवं न्यस्य मूर्ध्नि ॥२॥
नारायणं न्यसेत् ।१९ ललाटे माधवं न्यस्य भ्रुवोर्गोविन्दमेव च
चक्षुर्मध्ये न्यसेद्विष्णुं कर्णयोर्मधुसूदनम् २० त्रिविक्रमं कपोले
तु वामनं कर्णमूलयोः दामोदरं दन्तपंक्तौ वाराहं चिबुके तथा २१
हृषीकेशं तूत्तरोष्ठे पद्मनाभं तथाधरे जिह्वायां वासुदेवं च तालौ

दिवानामप्यघघ्नोऽसौ तुष्टो यस्य जनार्दनः ॥ यस्समस्सर्वभूतेषु यथात्मनि
तथापरे ऽपवासादिना तेन तोषितो मधुसूदनः ॥९॥ तोषिते तत्र जायन्ते
न्ते नराः पूर्णमनोरथाः अरोगाः सुखिनो भोगभोक्तारो मुनिसत्तम
॥१०॥ न तेषां शत्रवो नैव स्पर्शरोगाभिचारकम्॥ ग्रहरोगादिकं चापि
पापकार्यं च जायते ॥११॥ अव्याहतानि कृष्णस्य चक्रादीन्यायुधा
नि च रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासितः ॥१२॥ दाल्भ्य उवा
च अनाराधितगोविन्दा ये नराः दुःखभागिनः तेषां दुःखाभिभू
तानां यत्कर्त्तव्यं कृपालुभिः ॥१३॥ पश्यद्भिः सर्वभूतस्थं वासुदेवं म
हामुने समदृष्टिभिरीशेशान्तन्मे ब्रूहि शेषतः ॥१४॥ पुलस्त्य
उवाच ॥ ग्रहीत्वा तु समूलाग्रान्कुशा नृमृष्टानुपस्पृशेत्॥

आपादमस्तकं चैव प्रद्युम्नं कल्पयेद् बुधः पूजाकाले तु देवस्य जपकाले
तथैव च ॥३०॥ होमारंभे तु कर्त्तव्यः त्रिसंध्यं चैव नित्यशः एवं न्यासविधिं
कृत्वा साक्षान्नारायणो भवेत् ॥३१॥ एवं न्यासं पुनः कृत्वा पश्चान्मंत्रं
प्रयोजयेत् अपामार्जनकं न्यासं सर्वपापविनाशनम् ॥३२॥ आ
त्मनस्तु परेषां तु विधिरेष उदाहृतः वैष्णवेन तु कर्त्तव्यं सर्वसिद्धि
॥३॥ प्रदायकम् ॥३३॥ जपारंभकाले तु अपामार्जनकं परम् । तनुर्विष्णु ॥३॥
मयी तस्य यावत्किंचिन्न भाषते ३४ सर्वदुःखपवातापयत्नात्पठ
त्यतद्विज ॥ ध्यात्वा नारायणं देवं पठेत् स्तोत्रमिदं पुनः ॥३५॥ अभयं सर्वभूते
भ्यो विष्णुलोकं स गच्छति ॥ अस्यापमार्जनकस्तोत्रस्य पुलस्त्य ऋषिरनु
ष्टुप् छन्दो वाराह नरसिंह वामन विष्णुर्देवो देवता हरास्य दुरितमिति बी
जम् वाच्युतानन्दगोविन्देति शक्तिः तत्प्रहारक केशान्तेति कीलकम्

तुगलऽधुजम् २२ वैकुंठं कण्ठमध्ये च अनन्तं नासिकोपरि पृष्ठे
क्षितिधरं विन्याद्च्युतं स्कन्धयोर्न्यसेत् २३ दक्षिणे तु भुजे विप्रं
विन्यसेत्पुरुषोत्तमम् वामभुजे महायोगं राघवं हृदि विन्यसेत्
२४ वामपार्श्वे हरिं विन्यात्कटिमध्ये जनार्दनम् वक्षस्थले माध
वं च कक्षयोर्भोगशायिनम् ।२५ स्वप्नं भुवं मे ढूमध्ये ऊर्ध्वो स्वे
कगदाधरम् चक्रां पुंसं जानुमध्ये जंघयोरच्युतं न्यसेत् २६।
गुल्फयोर्नारसिंहं तु पादपृष्ठे त्रिविक्रमम् अंगुलीषु श्रीधरं च पु
ण्डरीकाक्षं तु सन्धिषु २७ कूर्मं पादतले न्यस्य वाराहं च परायतः
रोमकूपे गुडाकेशं कपर्दं रक्तास्थिमज्जसु २८ मनोवाग्बुद्ध्यहं
कारे ध्रुवं न्यस्य जनार्दनम् नखेषु माधवं चैव न्यसेत्पादतलेऽच्युतम्
२९

यत्तत्सिध्यतु मे वचः ॥८०॥ त्रिविक्रमाय रामाय वैकुण्ठाय हराय च ॥ न
मस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥८१॥ नारायणाय देवाय विष्वे
शाय हराय च ॥ नमस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥८२॥ वारा
ह नारसिंहेश वामनेश त्रिविक्रम ॥ हयग्रीवेश सर्वेश हृषीकेश ह
 राशुभम् ॥८३॥ अपराजित चक्राद्यैश्चतुर्भिः परमायुधैः ॥ अख
ण्डितानुभावैस्त्वं सर्वदुःखहरो भव ॥८४॥ हरत्वमुकस्य दुरितं दुः 
 कृतं दुरुपोषितम् ॥ मृत्युबाधार्तिभयदमरिष्टस्यापि यत्फलम्
॥८५॥ पराभिध्यानसहितं प्रयुक्तं चाभिचारिकम् ॥ ज्वरस्पर्शमहा
रोगं प्रयोगं ज्वरया ज्वरह ह्रूं वासुदेवाय नमः कृष्णाय खड्गिने ॥८६॥
नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥ नमः कमलकिंजल्कपीत
निर्मलवाससे ॥८७॥ महाहवरिपुस्कन्धघृष्टचक्राय चक्रिणे ॥

ममसत्तरोगात्तयार्थे विनियोगः चक्रिणे हृदयाय नमः ॥३६॥ शार्ङ्गिणे शि
रसे स्वाहा गदिने शिखायै वषट् खड्गिने कवचाय हुम् ॥३७॥ वज्रि
णे अस्त्राय फट् स्फुरत्स्फटिकनारसिंहं भ्रकुटितमुखं रक्तनेत्राधरो
ष्ठं तेजोभिः प्रज्वलन्तं हुतवहसहस्रांऽ शिरोस्य सुरेन्द्रै
र्भिन्नोयेन नरवाग्नेर्गजमददलितैर्दो नयेन्द्रो हरिरूपः सो
ऽयं नः पातु नित्यं त्रिभुवनविजयी सिंहरूपेण विष्णुः नमस्तु
परमार्थाय पुरुषाय महात्मने॥ अरूपबहुरूपाय व्यापिने
परमात्मने॥३८॥ निष्कल्मषाय शुद्धाय ध्यानयोगप
राय च॥ नमस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः॥३९॥
गोविन्दपद्मनाभाय वासुदेवाय भूभृते॥ नमस्कृत्य प्रवक्ष्यामि

कपाद्मपद्मप्रहरस्त्रिशिरारक्तलोचनः ॥ सुमेप्रीतः सुखेदद्यात्सर्वामयपति
र्ज्वरः ॥ ५६ ॥ ऐकाहिकं द्व्याहिकं च तथा त्रिदिवसं ज्वरम् । चातुर्थिकं तथा
त्युग्रं तथैव सततं ज्वरम् ॥ ५७ ॥ दोषोत्थं सन्निपातोत्थं तथैवागन्तु
कं ज्वरम् ॥ शमं नयाशु गोविन्द छिन्धि छिन्ध्यस्य वेदनाम् ॥ ५८ ॥
नेत्रदुःखं शिरोदुःखं दुःखं चोदरसंभवम् । अनिश्वासमतिश्वासं
॥५॥ परितापं च वेपथुम् ॥ ५९ ॥ गुदघ्राणाह्वरोगांश्च कुष्ठरोगांस्तथा ॥५॥
5 क्षयपाण्डुर कामलादींस्तथा रोगान् प्रमेहांश्चातिदारुणान् ॥ ६० ॥ ये वा
तप्रभवा रोगा ये च पित्तसमुद्भवाः । कफोद्भवाश्च ये रोगाः ये चान्ये स
न्निपातिकाः ॥ आगन्तुकाश्च ये केचिल्लूताविस्फोटकादयः । ते सर्वे
प्रशमं यान्तु वासुदेवापमार्जिताः । विलयं यान्तु ते सर्वे विष्णोरुच्चा

दंष्ट्रोऽनन्तजितन्ते त्रयीमूर्त्तिमते नमः ॥४८॥ महापातकवराहाय प्रोद्यन्मो
गानुभोगिने ॥ तस्महापातककेशाय ज्वलत्पावकलोचन ॥४९॥ चक्राधिके
नरवस्त्रार्धदिव्यसिंह नमोऽस्तु ते ॥ क्राश्यपायातिह्रस्वाय ऋग्यजुःसाम
मूर्त्तये ॥५०॥ तुभ्यं वामनरूपाय क्रमते गां नमोऽस्तु ते ॥ वाराहेशेग
दंष्ट्राग्रे सर्वपापफलानि वै ॥५१॥ मर्दमर्द महादंष्ट्र मर्दमर्द च पातकम्
नरसिंह करालास्य दन्तप्रान्त नखोज्ज्वल ॥५२॥ भञ्ज भञ्ज निना
देन दुष्टान्यस्यार्त्तिनाशन ॥५३॥ ऋग्यजुःसामगर्भाभि र्वाग्भि
र्वामनरूपधृक प्रशमं सर्वदुष्टानि नयत्व सजनार्दन ॥५६
आघन्तव न्तः कन्यः पुराणः मन्त्रावहन्तो धनुशासिताः
सर्वज्वरं घ्नन्तुममानिरुद्ध प्रद्युम्न संकर्षण वासुदेव ॥५५॥

 

क्रौंचिपेचबालग्रहाः कचित् नरसिंहस्य ते दृष्ट्वा दग्धा ये चापि यौवने
॥१०॥ दंष्ट्राकरालवदनो नरसिंहो महारवः ॥ ग्रहान् शेषान्निःशेषान्
करोतु जगतो हितान् ॥११॥ नरसिंह महासिंह ज्वालामालोज्ज्व
लानन ॥ ग्रहान् शेषान्निःशेषान् खाद खादाग्निलोचन ॥१२॥
॥६॥ ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः ये वा तप्रभवा रोगा ग्रह ॥६॥
पीडाश्च दारुणाः ॥१३॥ शस्त्रक्षते च ये दोषा ज्वालागर्भिकास्तथा
6 तान्सर्वान्सर्वलास्या जनार्दनः ॥ किंचिद्रूपसमास्थाय वासुदेवाय मु
नाशय ॥१४॥ त्ति प्त्वा सुदर्शनं चक्रं ज्वालामालातिभीषणम्
सर्वदुःखप्रशमनं कुरु देव [illegible] मुने ॥१५॥ सुदर्शन महाचक्र गो
विन्दस्य करायुध । तीक्ष्णधार महावेग छिन्धि छिन्धि महा

ज्वरा

स्यो नमु ॥ क्षयं गच्छन्तु ये मांसो तेन चक्राभिहताहतैः ॥६३॥ अच्युतान
न्तगोविन्द नामोच्चारण भेषजैः नश्यन्ति सकला रोगाः सत्यं सत्यं व
दाम्यहम् ॥६४॥ स्थावरं जंगमं चापि कृत्रिमं चापि यद्विषम् ॥ दन्तो
द्भूतं नखोद्भूतं आकाशप्रभवं विषम् ॥६५॥ लूतादिप्रभवं यच्च
विषमत्यन्तदुःखदम् शमं नयतु तत्सर्वं कीर्तितोऽस्य जनार्दनः
॥६६॥ ग्रहान्प्रेतग्रहांश्चैव तथा वै डाकिनीग्रहान् वेतालांश्च
पिशाचांश्च गंधर्वान्यक्षराक्षसाः ॥६७॥ शाकिनीपूतनाद्यांश्च
तथा वै नायकग्रहान् मुखमण्डिकान् क्रूरा रेवती वृद्धरेव
ती॰ वृद्धिकाख्यान् ग्रहांश्चैव रोगा मातृग्रहानपि । बालस्य
विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥६८॥ वृद्धानां ये ग्रहाः

मस्यच्युजन्तये ॥ यथा विष्णौ स्मृते क्षयं गच्छन्ति पातकाः ॥ तेन स
त्येन सकलं दुःखमस्य प्रशाम्यतु ॥ यथा देवेश्वरो विष्णुः सर्वदेवेषु
गीयते ॥ सत्येन तेन सकलं दुःखमस्य प्रशाम्यतु ॥ यथा विष्णौ
स्मृते सद्यः क्षयं यान्ति पातकम् ॥ सत्येन तेन सकलं यन्मयोक्तं त
थास्तु तत् ॥ शान्तिरस्तु शिवं चास्तु प्रणश्यत्व शुभं च यत् ॥ वासु
देवशरीरोत्थैः कुशैः संमार्जितो मया ॥ अपामार्जतु गोविन्दो न
रो नारायणस्तथा ॥ तथास्तु सर्वदुःखानि प्रशमं वचनाद्धरेः ॥ शा
न्ताः समस्त रोगाश्च ग्रहास्सर्वे विषाणि च ॥ भूतानि प्रलयं यान्तु
संस्मृते मधुसूदने ॥ एतत्समस्तरोगेषु भूतग्रहभयादिषु ॥ अपा
मार्जनकं स्तोत्रं विष्णुनामाभिमन्त्रितम् ॥ कुशमूले स्थितो ब्रह्मा

महान् छिन्धि छिन्धि महाव्याधीन् छिन्धि छिन्धि महाज्वरम्
छिन्धि वातं च भूतं च छिन्धि रोगं महाविषम् रुजं दाहं च मोहं च निभिषज्य
रोगद्भयम् ॐ ह्रां ह्रीं ह्रूं हूं फट् चक्रे हन हन छिधः नमो भगवते वासुदेवाय
भो भो सुदर्शन दुःस्वप्नं हर महारयः दुरितं हन हन पापं मथ मथ आरो
ग्यं कुरु कुरु ॐ ह्रीं ह्रीं ह्रूं ह्रूं फट् हन छिधः स्वाहा इति सुदर्शनना
म्ना महास्त्रानुदितोदधा प्राच्यां दिशि प्रतीच्यां च दक्षिणोत्तर
तस्तथा रक्षां करोतु सर्वात्मा नरसिंहः स्वगर्जितैः ॥ भुव्यन्तरि
क्षे तथा पार्श्वतः पृष्ठतोऽग्रतः व्याघ्रसिंहवराहादि ख्यातिचौ
र भयेषु च रक्षां करोतु भगवान् बहुरूपी जनार्दनः ॥ यथा
विष्णुर्जगत्सर्वं सदेवासुरमानुषं ॥ तेन सत्येन दुःखानि शाम

मृत्युर्नजायते पाव्रस्मास्मारकुष्ठादिस्तस्यपार्श्वं नगच्छति ॥८४
विष्णुभक्तेन कर्त्तव्यं ब्रह्महत्याविनाशनम् विष्णोः प्रतिकरं स्तो
८ त्रं यः पठेन्नियमेन च ८५ विष्णुलोकमवाप्नोति सत्यं सत्यं वदा
म्यहम् तस्यानुस्मृतिर्योविष्णोर्मनसाचिन्तितं स्मरेत् ८६
॥१२॥ स्तोत्रराजमिदं नाम अपामार्जनकं परम् कोटिजन्मत ॥८॥
स्यपरमंपदमवाप्नुयात् इति श्रीविष्णुपुराणे विष्णुस्तो
त्रम् समाप्तं संपूर्णं शुभमस्तु शुभं भूयात् ॥ ॥ ॥

कुशमध्ये जनार्दनः ॥ कुशाग्रे शंकरं विन्द्याल्लयो देवाः कुशे स्थिताः
एते कुशा विष्णुशरीरसंभवा जनार्दनोऽयं स्वयमेव चागतः । ह
तं मया दुःखमशेषमस्य स्वस्थो भवत्वेष वचो यथा हरेः ॥ शान्ति
रस्तु शिवं चास्तु दुःखमस्य प्रशाम्यतु ॥ यदस्य दुरितं किंचित्तत्
क्षिप्तं लवणाम्भसि ॥ स्वास्थ्यमस्तु शिवं चास्तु हृषीकेश
स्य कीर्तनात् ॥ यत एवागतं पापं तत्रैव प्रतिगच्छतु ॥ एतद्रो
गादिभूतानां जन्तूनां हितमिच्छति ॥ विष्णुभक्तेन कर्त्तव्य
मपामार्जनकं परम् ॥ अनेन सर्वदुःखानि प्रशमं यान्त्यसं
शयम् ॥ सर्वभूतहितार्थाय तस्मात्कुर्यात्सदैव हि ॥ एतत्स्तो
त्रं पठेन्नित्यं परमायुर्विवर्द्धनम् ॥ विनाशाय च रोगाणामप